विशेषणविशेष्यत्वात्सत्यादीन्यत एव च ।
चत्वार्येकविभक्तीनि नीलरक्तोत्पलादिवत् ॥ ४४ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र चतुर्णां पदानामेकविभक्तियुक्तत्वे हेतुमाह । विशेषणेति ॥ ४४ ॥

वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितम् ।
तस्माद्विशेष्यं विज्ञेयं ततोऽन्यत्स्याद्विशेषणम् ॥४५॥

तेषु विशेषणविशेष्यत्वविभागं दर्शयति । वेद्यत्वेनेति ॥ ४५ ॥

नीलं महत्सुगन्धीति विशिष्यन्त्युत्पलं यथा ।
एकाधिकरणान्येवं सत्यादीनि परं महत् ॥ ४६ ॥

ब्रह्मणो विशेष्यत्वं सत्यादीनां विशेषणत्वमित्येतद्दृष्टान्तेन साधयति । नीलमिति । परं महदित्यत्र महदितिविशेष्यं ब्रह्मोच्यते ॥ ४६ ॥

एवं विभज्यमानं सत्सत्यमित्येवमादिभिः ।
स्वविशेषविरुद्धेभ्यो धर्मेभ्यः स्यान्निराकृतम् ॥४७॥

उक्ते विशेषणविशेष्यत्वे फलितं कथयति । एवमिति । स्वशब्देन ब्रह्मोच्यते विशेषाः सत्यादयस्तैर्यदा ब्रह्म विशेषितं तदा सत्यादिविरुद्धेभ्योऽसत्यजाड्य-परिच्छिन्नेभ्यो निराकृतं ब्रह्म सिध्यतीत्यर्थः ॥ ४७ ॥

एवं च सति तज्ज्ञातं यदन्येभ्योऽवधार्यते ।
नीलोत्पलादिवद्ब्रह्म नान्यथाऽनवधारणात् ॥ ४८ ॥

व्यावृत्तिफलमाह । एवं चेति । यथा नीलमुत्पलं रक्तमुत्पलमित्यादिप्रयोगे व्यक्त्यन्तरेभ्यो व्यावृत्तमुत्पलमवगम्यते तथा यदन्येभ्योऽसत्यादिभ्यो व्यावृत्तमवधार्यते । तद्ब्रह्मेत्येवं व्यावृत्तत्वे सति सच्चिदेकतानं परिपूर्णं तदिति ज्ञातं भवति व्यावृत्तिश्चेन्न ज्ञायते तदाऽनृतादिभ्यो व्यावृत्तसिद्धेर्न ब्रह्म ज्ञातं स्यादित्यर्थः ॥ ४८ ॥

---

१ ( क. ) °न्येव स° । २ ( ङ. ) °ज्ज्ञानं य° । ३ ( ग. घ. ) व्यक्तमित° । ४ (ख.) °तानन्दप° ( च. ) °तानन्दं प° । ५ ( क. ग. ) °ह्मज्ञानं स्या° ।

नन्तु व्यभिचरद्वस्तु स्याद्विशेष्यं विशेषणैः ।
ब्रह्मान्तराहते त्वत्र कुतो ब्रूहि विशेष्यता ॥४९॥

ब्रह्म विशेष्यं सत्यादि विशेषणमित्यत्र शङ्कते । नन्विति । यद्वस्तु व्यक्ति-भेदान्मिथो व्यभिचरति तद्विशेषणैर्विशेष्यमिष्यते । यथोत्पलव्यक्तयो भूयस्यो मिथो व्यभिचारिण्यो नीलरक्तादिधर्मैर्विशेष्यन्ते न तथा ब्रह्मणोऽद्वितीयत्वाद्भ-हुत्वं संभवत्यतो ब्रह्मणि विशेषणविशेष्यत्वानुपपत्तिरित्यर्थः ॥ ४९ ॥

विशेषणविशेष्यत्वे सति दोषः प्रसज्यते ।
लक्ष्यं लक्षणतां यातु न दोषोऽत्र मनागपि ॥ ५० ॥

विशेषणविशेष्यपरत्वाभावाद्वाक्यस्य लक्षणकथनेन ब्रह्मप्रतिपादनपरत्वान्न चोद्यावकाशोऽस्तीति परिहरति । विशेषणेति ॥ ५० ॥

अनेकात्मविशेष्यस्थमागृहीतविशेष्यकम् ।
सजातीयान्निराकर्तृ विशेषणमिहोच्यते ॥ ५१ ॥

किं तर्हि विशेषणं तदाह । अनेकेति । एकरसस्य विशेष्यत्वादर्शनादनेका-त्मनि नानारसे विशेष्ये स्थितं तत्रैवोपरक्तं समानजातीयाद्व्यावर्तकं व्यवहार-भूमौ विशेषणं प्रसिद्धमित्यक्षरार्थः । विशेष्यबुद्ध्युपरक्तमेव विशेष्यव्यावर्तकं विशेषणमित्यर्थः ॥ ५१ ॥

सामान्येतरसंयुक्तमनेकगुणसंयुतम् ।
संभव्यसंभविगुणं विशेष्यं तत्प्रचक्षते ॥ ५२ ॥

किं तर्हि विशेष्यं तदाह । सामान्येति । सामान्यविशेषसंबद्धमनेकैः शुक्लत्वा-दिभिर्गुणैर्युक्तं विशेष्यमित्यर्थः । ते गुणा यदि तत्र नित्यं संभवन्ति तदा न तस्य विशेष्यत्वं विशेषाभावाद्यदि सर्वथा तत्र न संभवन्ति तदाऽपि न विशे-ष्यत्वमसतां व्यावर्तकत्वायोगादिति मत्वाऽऽह । संभवीति । सजातीयमात्रा-द्व्यावर्तितं विशेष्यमित्यर्थः ॥ ५२ ॥

---

१ (ग. घ. ङ. च.) °द्विगु° । २ (ग. घ.) °पि च न ।

विशेष्यान्तरशेषं यत्स्वविशेष्यान्यबुद्धिकृत् ।
परिकल्पितसंबन्धं लक्षणं भावलक्षणम् ॥ ५३ ॥

संप्रति लक्ष्यस्य लक्षणमाह । विशेष्यान्तरेति । विशेष्यान्तरं विशेष्यादन्यत्तस्य शेषमित्यस्यैवार्थमाह । स्वविशेष्येति । स्वेन विशेष्यं स्वेन लक्ष्यं यत्तस्य सर्वस्मादन्यबुद्धिं व्यावृत्तबुद्धिं करोतीत्यर्थः । लक्ष्येणासंबद्धस्य लक्षणत्वानुपपत्तेः स्वलक्ष्येण सह परिकल्पितो निष्पन्नः संबन्धस्तादात्म्यं यस्य तदेवंविधलक्षणं वस्तु भावलक्षणं पदार्थलक्षणमित्याह । परिकल्पितेति । सजातीयाद्विजातीयाच्च सर्वस्माद्व्यावर्तकं लक्षणमित्यर्थः ॥ ५३ ॥

निरस्यति यथैवैकं तथैवान्याद्विरोधि यत् ।
स्वात्मनैवैकरूपेण लक्ष्यमत्र निगद्यते ॥ ५४ ॥

लक्ष्यलक्षणमधुना कथयति । निरस्यतीति । यथाकाशमदमाकाशमित्युक्ते सत्याकाशं स्वलक्षणेनावकाशदानेन सर्वस्माद्व्यावर्त्यते तदेकमित्येकजातीयमुच्यते । अन्यदिति । भिन्नजातीयमत एव विरोधीत्युक्तं तथैवाकाशादन्यदपि स्वात्मनैवैकरूपेण स्वलक्षणेन सर्वस्माद्व्यावर्तितं यत्तद्रूपं विवक्षितं सर्वस्माद्व्यावर्तितं लक्ष्यमित्यर्थः ॥ ५४ ॥

सत्यादयः परार्थत्वादितरेतरनिस्पृहाः ।
एकैकस्त्वत एवैषां विशेष्यार्थेन बध्यते ॥ ५५ ॥

विशेषणादीनां चतुर्णां स्वरूपमुक्त्वा विशेषणविशेष्यत्वपक्षमुपपादयति । सत्यादय इति । सत्यज्ञानानन्ता विशेष्यपारतन्त्र्यादन्योन्यनिरपेक्षत्वान्न मिथः संबध्यन्ते तथा च मिथोऽसंबंधात्परतन्त्रत्वाच्चैषां मध्ये प्रत्येकमेव सत्यादिविशेष्यार्थेन ब्रह्मणा संबध्यते ततश्च सत्यादिविशेषणानि प्रत्येकं ब्रह्मणा संबद्धानि ब्रह्मासत्यादिभ्यो व्यावर्तयन्तीत्यर्थः ॥ ५५ ॥

सकृत्प्रमितरूपाद्यद्रूपमन्यत्कदाचन ।
नैव प्रपद्यते सत्यं तस्मात्कार्यविलक्षणम् ॥ ५६ ॥

सत्यशब्दार्थं दर्शयति । सकृदिति ॥ ५६ ॥

---

१ ( ख. ग. घ. ) °बन्धल° । २ ( ग. घ. ) °वृत्तिबु° । ३ ( ग. घ. ) °स्तेयैत्र ल° । ४ ( ग. घ. ) °तथा चान्य° । ५ ( ग. घ. ) °क्ष्यस्य ल° । ६ ( क. ख. ) °वर्तते° । ७ ( ग. घ. ) °वावका° । ८ ( ख. ङ. ) °तत्स्यात्का° ।

यावान्कश्चिद्विकारोऽत्र ब्रह्म तस्मान्निवर्तितम् ।
भजते कारणत्वं तत्तथाऽचैतन्यधर्मकम् ॥ ५७ ॥

सत्यमितिविशेषणेन ब्रह्म कार्यादन्यदिति निर्धार्यते चेत्तस्य कारणत्वं प्राप्तं ततश्च मृदादिवज्जडत्वं प्रसक्तमितिशङ्कते । यावानिति ॥ ५७ ॥

तद्दोषद्वयनुत्त्यर्थं ज्ञानं ब्रह्मेत्युदीर्यते ।
अनेकार्थाभिसंबन्धात्किमर्थं ज्ञानमुच्यते ॥ ५८ ॥

कारणत्वं जडत्वमितिप्राप्तं दोषद्वयं निराकर्तुं विशेषणमवतारयति । तद्दो-षेति । कर्तृकर्मकरणभावविषयत्वेन ज्ञानशब्दस्यानेकार्थत्वसंभवात्तदर्थविशेषबु-भुत्सया पृच्छति । अनेकार्थेति ॥ ५८ ॥

ब्रह्मणो भेदकं यस्मादानन्त्येन च संगतेः ।
ज्ञप्तिर्ज्ञानमितिन्याय्यमन्यथा दोषदर्शनात् ॥ ५९ ॥

ब्रह्मविशेषणत्वेन ज्ञानपदप्रयोगाज्ज्ञानमनन्तमित्यनन्तपदसंयोगात्कर्त्रादि-विषयत्वे तदयोगाद्भावविषयं ज्ञानपदमित्युत्तरमाह । ब्रह्मणइति । ज्ञानपदस्य ज्ञप्तिविषयत्वं परिहृत्य कर्त्रादिविषयत्वे ब्रह्मविशेषणत्वायोगादानन्त्येन संगते-रसंगतत्वाच्च ज्ञप्तिविषयत्वमेव युक्तमित्युपपादयति । अन्यथेति ॥ ५९ ॥

तस्मात्सत्यमनन्तं यज्ज्ञानं तदिह गृह्यते ।
भावसाधनमेवातः स्यादेतद्युक्तिदर्शनात् ॥ ६० ॥

पदद्वयार्थमुपसंहरति । तस्मादिति । ज्ञानपदं भावसाधनमेव स्यादित्यत्रातः-शब्दोपात्तं हेतुं दर्शयति । युक्तीति ॥ ६० ॥

ज्ञानं ब्रह्मेति वचनादन्तवत्त्वमवाप तत् ।
ज्ञानस्य लौकिकस्येह ह्यन्तवत्त्वसमन्वयात् ॥ ६१ ॥

ज्ञानस्य ब्रह्मत्वे तस्य क्षणिकत्वेन ब्रह्मणोऽपि तद्रूपस्य क्षणिकत्वं स्यादिति शङ्कते । ज्ञानमिति ॥ ६१ ॥

अतस्तत्प्रतिषेधार्थमनन्तमितिशब्द्यते ।
अन्तः सीमा तथेयत्ता तन्निषेधस्त्वनन्तता ॥ ६२ ॥

कूटस्थचैतन्यं ज्ञानं न क्रिया ततः शङ्कितदोषस्य निरवकाशत्वमित्यनन्त-पदेन परिहरति । अत इति ॥ ६२ ॥

१ ( क. ख. ) °पयं ज्ञा° । २ ( क. ख. ) °टस्थचै° ।

अनृतादिनिषेधेन सत्यादीनामुपक्षयात् ।
ब्रह्मणश्चाप्रसिद्धत्वान्मिथ्यार्थं चेद्वचो न तत् ॥६३॥

विशेषणपक्षे सत्यादिशब्दार्थानामनृतादिनिवृत्त्यर्थत्वाद्विशेष्यस्य च ब्रह्मणो मानान्तरासिद्धत्वात्सत्यादिवाक्यं शून्यार्थनिष्ठं माप्रमित्याशङ्कामनूद्य प्रतिषेधति। अनृतादिति ॥ ६३ ॥

परमार्थमनालिङ्ग्य न दृष्टं वितथं क्वचित् ।
तस्माद्वा वितथं सर्वं परमार्थैकनिष्ठितम् ॥ ६४ ॥

न तदित्युक्तं सिद्धान्तं प्रपञ्चयति । परमार्थमिति । निरधिष्ठानभ्रमासंभवात्तदधिष्ठानस्य परमार्थवस्तुनो वक्तव्यत्वे सत्यादिवचनस्य तदर्थत्वान्न शून्यार्थतेत्यर्थः ॥ ६४ ॥

पदात्पदार्थबुद्धिर्नि उत्पलादौ प्रजायते ।
तदभावधियै नालं पदवाक्यार्थरूपतः ॥ ६५ ॥

सत्यादिपदादसत्यादिप्रतिषेधप्रतीतिमङ्गीकृत्योक्तमिदानीमङ्गीकारं परित्यजन्ति । पदादिति । पदार्थविषया बुद्धिरेव पदादुत्पद्यमाना लोके दृश्यते । न तु पदं वाक्यार्थविषयां बुद्धिमुत्पादयितुमुत्सहते । अनृतनिषेधो जाड्यनिषेधः परिच्छेदनिषेधश्चेत्यस्य सर्वस्य वाक्यार्थरूपत्वात्तथाविधाभावज्ञानार्थं सत्यादिपदं नै च पर्याप्तं तथा च परमार्थत्वस्वयंप्रभत्वपूर्णत्वाख्यानर्थान्बोधयन्ति सत्यादीनि पदानीत्यर्थः ॥ ६५ ॥

प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः ।
पश्चादभावं जानाति वध्यघातकवत्पदात् ॥६६॥

सत्यादिपदेभ्यश्चेदसत्यादिनिषेधानधिगतिः कथं तर्हि तद्धीः सिध्येदित्याशङ्क्याऽऽह । प्रतिपद्येति । यथावच्छयेनमूँपकादिना दूषितां भूमिमुपलभ्य तद्विरोधिनो घातकस्य मार्जारादेरभावोऽर्थादवगम्यते तथा सत्यादिपदात्पदार्थं परमार्थत्वादिकं प्रतीत्य प्रतीतपरमार्थत्वादिविरोधिनोऽसत्यत्वादेरभावोऽर्थापत्त्या ज्ञायते न हि सत्यादेरसत्यादेश्चैकाधिकरणत्वं घटते तेन मानान्तरसिद्धत्वादन्यव्यावृत्तेरशब्दार्थतेत्यर्थः ॥ ६६ ॥

---

१ ( ग. घ. ) °थामा° । २ ( ग. घ. ङ. च. ) °न प° । ३ ( ख. घ. ङ. च. ) °मूषिका° । ४ ( ग. घ. ) °दात्पर° । ५ ( च. ) °तीत्या परमार्थत्वासत्यादेर । ६ (क. ख. ) °र्थसत्यादि° । ७ ( ग. घ. ) °सत्त्वादे° । ८ ( ग. ) °त्यात्सत्या° ।

शब्दात्प्रतीयते तावत्संगतिर्धर्मधर्मिणोः ।
मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः ॥६७॥

अर्थापत्तिसिद्धार्थस्यापि शब्दार्थत्वं किं न स्यादित्याशङ्क्यानन्यलभ्यत्वाभावान्नैवमित्याह । शब्दादिति । सत्यं ब्रह्मेत्यादिना ब्रह्मशब्दसमानाधिकृतसत्यादिशब्दाद्धर्मस्य सत्यादेर्धर्मिणश्च ब्रह्मणस्तादात्म्यरूपा संगतिस्तावदवगम्यते तथा च सत्यादिरूपं चेद्ब्रह्म कथं तदसत्यादि स्यादित्यर्थापत्तिरूपान्मानान्तरादसत्याद्यपोहो भासते ततश्च तस्यापूर्वत्वाभावान्न शब्दगम्यत्वं युज्यते । यश्चार्थादर्थो न स चोदनार्थ इति न्यायात्तदेवं सत्यादिवाक्यं परमार्थादिरूपे ब्रह्मणि पर्यवसितमशून्यार्थं सिद्धमित्यर्थः ॥ ६७ ॥

न नीलवदनादाय नीलधीरुपजायते ।
विशेष्यज्ञानमप्येवं नान्तरेण विशेषणम् ॥ ६८ ॥

सत्यादिवाक्यस्याशून्यार्थत्वे हेत्वन्तरमाह । न नीलवदिति । यथा नीलमित्युक्ते नैल्यविशेषणविशिष्टं वस्तु भाति विशेष्यमन्तरेण विशेषणायोगात्तथा विशेष्यमित्युक्ते विशेषणवद्वस्तु गम्यते तयोर्मिथोबद्धत्वादेवं प्रकृतेऽपि सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्मेत्युक्ते शून्यनिष्ठत्वं सत्यादिवाक्यस्य नोपपद्यते विशेषणविशेष्ययोर्मिथो[2]बद्धत्वादित्यर्थः ॥ ६८ ॥

वाक्यार्थानुभवोऽस्माकं नीलादेरुपजायते ।
किं नीलमिति[3]चाकाङ्क्षा सत्येवमुपपद्यते ॥६९॥

इतोऽपि सत्यादिवाक्यं शून्यनिष्ठं न भवतीत्याह । वाक्यार्थेति । अन्वितोऽर्थो वाक्यार्थस्तत्रानुभवोऽस्माकमन्विते पदशक्तिमवगच्छतां नीलमुत्पलमित्यादिपदादुत्पद्यतेऽन्यान्विते शक्तिग्रहे स[4]त्येव नीलमित्युक्ते किं नीलमित्याकाङ्क्षा दृश्यमानोपपद्यते तुच्छे च नीलादिपदार्थे नीलादिपदं स्वार्थशून्यमितरान्वितं नाभिधातुं शक्नोति । तुच्छस्य केनचिदन्वयाभावादतश्चेतरान्विते संगतिसंवेदनसामर्थ्यान्न सत्यादिवाक्यस्य शून्यार्थत्वाशङ्केत्यर्थः ॥ ६९ ॥

---

१ ( ग. ) °र्थोवबोध्यत्वा° । २ ( ग. ) °र्थोवबोध्यत्वा° । ३ ( ख. ग. घ. ) °ति-चाका° । ४ ( क. ख. ) °त्येवं नी° ।

प्रत्यक्षतोऽवसेयत्वादेवं सर्वस्य वस्तुनः ।
नैव साधयितुं शक्यं क्षणिकत्वं कथंचन ॥ ७० ॥

ज्ञानं ब्रह्मेति सामानाधिकरण्याज्ज्ञानस्य क्षणिकत्वाद्वाक्यस्य शून्यानिष्ठत्वाभावेऽपि क्षणिकवस्तुनिष्ठता दुर्वारेत्याशङ्क्याऽऽह । प्रत्यक्षत इति । न हि क्षणिकत्वं कस्यचिदपि पदार्थस्य कदाचिदपि साधयितुं शक्यं प्रमाणाभावान्न तावत्प्रत्यक्षमत्र प्रमाणीभवति तेनाज्ञातस्यार्थस्य ज्ञातत्वाभ्युपगमादनधिगतिसमये चाधिगतेर्विरुद्धत्वादवस्थाभेदेन वस्तुनि ज्ञातत्वाज्ञातत्वयोर्वक्तव्यत्वादेवमनुमानादेर्मानान्तरस्यापि वस्तुन्यज्ञाते ज्ञापकत्वाविशेषान्न क्षणिकत्वसाधकत्वं दृष्टचविपरिलोपश्रुतेश्च नित्यदृष्टिरूपस्य ब्रह्मणोऽक्षणिकत्वान्न सत्यादिवाक्यस्यक्षणिकार्थनिष्ठत्वमित्यर्थः ॥ ७० ॥

सति कुम्भे न नाशोऽस्ति नाशोऽपि न तदाश्रयः ।
अस्ति चेत्पूर्ववद्धर्मी न नष्टः पूर्ववद्धटः ॥ ७१ ॥

वस्तुनि नाशस्य दुर्निरूपत्वाच्च क्षणिकत्वायोगान्न क्षणिकार्थनिष्ठता सत्यादिवाक्यस्य सिध्यति न तावदसति घटे तत्र नाशो वर्तितुमर्हति नैरर्थक्यादाश्रयाभावाच्च नापि सति घटे तत्र नाशोऽस्ति सत्त्ववन्नाशस्य तदाश्रयत्वायोगादेकत्र सत्त्वासत्त्वयोरपर्यायेण विरुद्धत्वादित्याह । सतीति । यदि नाशे प्रवृत्तेऽपि तदाश्रयत्वेन नाशप्रवृत्तिप्रागवस्थायामिव कुम्भोऽभ्युपगम्येत तर्हि पूर्ववदेव कुम्भस्य नष्टत्वाभावान्नाशात्प्राक्पूर्वोत्तरकालयोरविशेषो घटे स्यादित्याह । अस्ति चेदिति ॥ ७१ ॥

इष्टो नाशस्य नाशश्चेदस्तु जीव शतं समाः ।
घटोऽनाशीति मत्पक्षः स च नैवं विहन्यते ॥ ७२ ॥

सति घटे नाशस्य प्रवृत्तत्वेऽपि घटगतं सत्त्वं स्वविरुद्धं दृष्ट्वा पुनर्नष्टः स्यादित्याशङ्क्याङ्गीकरोति । इष्ट इति । नाशस्य नाशाङ्गीकारे घटस्याविनाशित्वपक्षक्षतिर्नास्तीति हेतुमाह । घट इति ॥ ७२ ॥

न नाशो हन्ति नष्टारं गन्तारमिव तद्गतिः ।
यस्मिन्सत्येव यः सिध्येन्निरुणद्धि स तं कथम् ॥७३॥

किंच नाशो न स्वाश्रयं घटं निवर्तयति । तत्क्रियात्वान्न हि गमिक्रिया स्वाश्रयं गन्तारं निवर्तयन्ती दृष्टेत्याह । न नाश इति । नाशस्य स्वाश्रयनिवर्तकत्वाभावं साधयति । यस्मिन्निति ॥ ७३ ॥

१ (ङ.) °नाशात्पूर्वोत्तरकालविषो घटे न स्या° । २ (क.ख.) °पक्षे क्ष° । ३ (ग. घ.) °द्धिकथं सतम् ।

लक्षणार्थमिदं वाक्यं यस्मात्पूर्वमुदाहृतम् ।
विशेषणाश्रयान्नातः शून्यताऽत्र प्रसज्यते ॥ ७४ ॥

सत्यादिवाक्यस्य विशेषणार्थत्वमुपेत्य शून्यार्थत्वं क्षणिकार्थत्वं च नास्तीत्युक्तम्। अधुना स्वरूपलक्षणार्थमिदं वाक्यमित्युक्तत्वान्न शून्यार्थत्वं[1] क्षणिकार्थत्वं वा वाक्यस्याऽऽशङ्कितव्यमित्याह । लक्षणार्थमिति । अत्रेति वाक्यार्थोक्तिः शून्यताग्रहणं क्षणिकतोपलक्षणार्थम् ॥ ७४ ॥

विशेषणत्वेऽप्येतेषां लक्षणार्थत्वमात्मनि ।
लक्ष्येऽसति न तादर्थ्यं सत्यादीनां प्रसज्यते ॥ ७५ ॥

सत्यमाकाशं ज्ञानं गुणोऽनन्ता पृथिवीत्यत्र सत्यादिपदस्य विशेषणार्थत्वदर्शनादत्रापि तथा स्यादित्याशङ्क्याऽऽह । विशेषणत्वेऽपीति । प्रत्यग्ब्रह्मणि विशेषणविशेष्यत्वस्याबुभुत्सितत्वात्तत्र सत्यादिपदं बुभुत्सितस्वरूपलक्षणार्थमेवेत्यर्थः।वाक्यस्य लक्षणार्थत्वेऽपि शून्यमेव लक्ष्यं किं न स्यादित्याशङ्क्याऽऽह। लक्ष्येऽसतीति ॥ ७५ ॥

अतो लक्षणवाचित्वान्न शून्यार्थमिदं वचः ।
विशेष्यत्वेऽपि नैवं स्यात्स्वार्थासंत्यागकारणात्॥७६॥

वाक्यस्य लक्षणार्थत्वादसतश्चासत्त्वादेव लक्ष्यत्वायोगान्नास्ति वाक्यस्य शून्यार्थत्वाशङ्केत्युपसंहरति । अत इति । सत्यादिभिर्ब्रह्मणो लक्ष्यत्वमङ्गीकृत्य वाक्यस्य नास्ति शून्यार्थतेत्युक्तम् । इदानीं ब्रह्मणः सत्यादिभिर्विशेष्यत्वेऽपि नास्ति वाक्यस्य शून्यार्थत्वं सत्यादिपदानां स्वार्थापरित्यागेन विशेष्यार्थनियामकत्वादित्याह विशेष्यत्वेऽपीति ॥ ७६ ॥

स्वार्थेऽसति न सत्यादेर्विशेष्यार्थनियन्तृता ।
नियम्यार्थनियन्तृत्वं स्वार्थे सत्युपपद्यते ॥ ७७ ॥

सत्यादिपदस्य स्वार्थनिष्ठस्यैव विशेष्यार्थनियामकत्वमित्येतदन्वयव्यतिरेकाभ्यां साधयति । स्वार्थेऽसतीति ॥ ७७ ॥

---

१ (ग.) °त्वं वा क्ष°। २ (ङ.) °क्यस्य श°। ३ (क. ग.) °कत्वोप°। ४ (ग. घ.) °शून्यते°। ५ (घ.) °र्थत्वनि°

स्वेनार्थेनार्थवांश्चात्र ब्रह्मशब्दः सहेतरैः ।
तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ॥ ७८ ॥
स्वार्थार्पणप्रनाड्यैव परिशिष्टौ विशेषणम् ।
तद्विरोध्यर्थसंत्यागः सामर्थ्यात्स्यान्न शब्दतः ॥७९॥

किंच परमार्थत्वादिसमर्पकैः सत्यादिशब्दैः सह शब्दोऽस्मिन्वाक्ये बृहद्वस्तुवाचित्वेनार्थवा³नालक्ष्यते ततश्च कुतो वाक्यस्य शून्यार्थतेत्याह । स्वेनेति । सत्यादीनि पदानि त्रीणि ब्रह्मणो विशेषणसमर्पकाणीत्यत्रावान्तरविशेषमाह । तत्रेति । सत्यत्वं ज्ञानत्वं पूर्णत्वमितिवदसत्यादिव्यावृत्तिरपिशब्दार्थः स्यादित्याशङ्क्य पूर्वोक्तं स्मारयति । तद्विरोधीति ॥ ७८ ॥ ७९ ॥

गुहायां निहितं यस्मादेतस्मादात्मनस्तथा ।
ब्रह्मात्मशब्दयोस्तस्मादैकार्थ्यमवसीयते ॥ ८० ॥

ननु पूर्णत्वेन ब्रह्मणो यदानन्त्यमुच्यते तदयुक्तं ब्रह्मात्मशब्दयोरर्थभेदादात्मना ब्रह्मणः परिच्छेदसिद्धेरिति तत्राऽऽह । गुहायामिति । यो वेद निहितं गुहायामिति वक्ष्यमाणत्वाद्ब्रह्मणो बुद्धिसाक्षित्वेनाऽऽत्मत्वागमात्तस्माद्वा एतस्मादात्मन इति चाऽऽत्मशब्दस्य ब्रह्मणि प्रयोगाद्ब्रह्मात्मशब्दयो रैकार्थ्याध्यवसायान्नाऽऽत्मना परिच्छेदो ब्रह्मणः संभवतीत्यर्थः ॥ ८० ॥

विज्ञानात्मातिरेकेण ज्ञाप्यते ब्रह्म चेत्परम् ।
नियोगगम्यः सन्भेदो वद केन निवार्यते ॥ ८१ ॥

य आत्मनि तिष्ठन्नित्यादिश्रुत्या विज्ञानात्मनो भेदेन परस्य ब्रह्मणो ज्ञापनान्न ब्रह्मात्मशब्दयोरेकार्थत्वसिद्धिरित्याशङ्क्य नियोगतो नियमेन शास्त्रगम्यो भेदो यदीष्टस्तर्हि तस्य निवारणानुपपत्तेर्भेदस्य भ्रान्तिसिद्धस्यानुवादादैक्यमेव शास्त्रार्थः स्यादित्याह । विज्ञानात्मेति ॥ ८१ ॥

न चेदात्मा परं ब्रह्म स्वतः स्यादस्य दुःखिनः ।
नियोगो वाऽनियोगो वा कं विशेषं करिष्यति ॥८२॥

शास्त्रगम्योऽपि जीवब्रह्मभेदस्तत्त्वमसीति चेतो धारयेदिति नियोगावष्टम्भात्तथाविधभावनाप्रभावाद्वा निवर्त्यो भविष्यतीत्याशङ्क्याऽऽह । न चेदिति । यद्यात्मनो ब्रह्मत्वं न स्वाभाविकं तदा न तन्नियोगभावनाभ्यां कर्तुं शक्यं न हि वह्नेः शैत्यमन्येन क्रियते नापि जीवब्रह्मभेदो नियोगादिना निवर्तयितुं शक्यते शास्त्रगम्यत्वाभ्युपगमादित्यर्थः ॥ ८२ ॥

---

१ (ग. घ. ङ.) °नाड्या च प°। २ (क.) °शिष्टैर्विशे°। ३ (ग. घ.) °वान्लक्ष्य°। ४ (ङ.) °त्यादिप°। ५ (क. ख.) पूर्णत्वे°। ६ (ख. ग. घ.) °योरैक्यार्था°। ७ (क.) °म्यः संभेदो°। ८ (ग. घ.) °नोर्भेदे°।

पश्यतः प्रत्यगात्मानमपविद्धान्यवस्तुनः ।
अहं ब्रह्मेति चेज्ज्ञानं शास्त्रादन्यत्परं कथम् ॥ ८३ ॥

जीवब्रह्मभेदस्य शास्त्रगम्यत्वमङ्गीकृत्योक्तं तदेवं नास्तीत्याह । पश्यत इति । नेति नेत्यस्थूलमनण्वित्यादिवाक्यादपाकृतानात्मवर्गस्य प्रत्यगात्मभूतमात्मानं परिशुद्धं पश्यतस्तत्त्वमस्ययमात्मा ब्रह्मेति शास्त्रात्तात्पर्योपेतादहं ब्रह्मेत्यात्मनि विज्ञानं जायते चेत्परंब्रह्मात्मनोऽन्यत्र भवेदात्मा वा ब्रह्मणोऽन्यो न स्याच्च आत्मनीत्यादिवाक्यस्यान्यपरत्वात्प्रधानवाक्यविरोधे प्रामाण्यायोगादित्यर्थः ॥ ८३ ॥

आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः ।
अनात्मत्वेऽस्य किं तैः स्यादात्मत्वे त्वन्यधी ह्नुतिः ॥८४॥

नन्वस्थूलत्वादिधर्मकं ब्रह्म स्थूलादिधर्मकस्त्वात्मा तयोर्मिथो विरोधादैक्यासिद्धिरिति तत्राऽऽह । आत्मन इति । त्वमर्थादात्मनः सकाशादन्यस्य ब्रह्मणो यद्यस्थूलत्वादयो धर्माः स्वीक्रियन्ते तदा तेषामस्थूलत्वादीनामात्मविशेषणत्वराहित्ये सत्यस्याऽऽत्मनस्त्वंपदार्थस्य तैरस्थूलत्वादिभिर्न किंचिद्भवति यदि पुनरस्थूलत्वादीनामात्मविशेषणत्वं तदात्मब्रह्मणोरन्यधीर्भेदबुद्धिस्तस्या निवृत्तिः सेत्स्यत्यात्मब्रह्मणोर्लक्षणाभेदादतो विरुद्धधर्मत्वाभावान्न भेदाशङ्केत्यर्थः ॥ ८४ ॥

यत्साक्षादित्युपक्रम्य य आत्मेत्युपसंहृतेः ।
अन्योन्यार्थसमाप्तेश्च व्यतिरेके त्वसंभवात् ॥ ८५ ॥

यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर इत्यत्र ब्रह्मणोपक्रम्याऽऽत्मनोपसंहारदर्शनादपि ब्रह्मात्मनोरैक्यमुपपन्नमित्याऽऽह । यत्साक्षादिति । ब्रह्मशब्दार्थस्य ब्रह्मणो ब्रह्मशब्दपर्यालोचनायामात्मनि समाप्तेरात्मशब्दपर्यालोचनायां चाऽऽत्मशब्दार्थस्याऽऽत्मनो ब्रह्मणि समाप्तेश्च तयोरैक्यं भेदे समाप्तिश्रुत्योरसंभवान्न हि तयोर्मिथो भेदे ब्रह्मशब्दार्थस्याऽऽत्मन्यात्मशब्दार्थस्य च ब्रह्मणि समाप्तिर्युक्तेत्याह । अन्योन्य इति ॥ ८५ ॥

---

१ (च.) °कृत्य त्वयोक्तं । २ (ग. घ.) °व नेत्या° । ३ (ग. घ.) ° कृतस्याना° । ४ (ग. घ. च.) °त्मा च ब्र° । ५ (ग. घ. ङ.) °स्थूलादि° । ६ (ग. घ.) °र्थात्म° । ७ (ग. घ.) °शब्दस्यार्थ° ।

आत्मैव चेत्परं ब्रह्म भवताऽभ्युपगम्यते ।
आत्मनो ज्ञानकर्तृत्वाज्ज्ञानं स्यात्कर्तृसाधनम् ॥८६॥

अनन्तं ब्रह्मेत्युक्ते तदानन्त्यसमर्थनार्थं ब्रह्मात्मनोरैक्यमुक्तमुपेत्य चोदयति । आत्मैवेति । ऐक्यपक्षे ज्ञानं ब्रह्मेत्यत्र जानातीति । ज्ञानमिति । ज्ञानपदं कर्तृसाधनमात्मनैस्तत्कर्तृत्वादतो ज्ञानकर्ताऽऽत्मा ब्रह्मेत्युक्तं भवतीत्यर्थः ॥८६॥

पारतन्त्र्यमनित्यत्वं धात्वर्थत्वे प्रसज्यते ।
तर्कशास्त्रप्रसिद्धेश्च कर्तृतैवाऽऽत्मनो भवेत् ॥ ८७ ॥

ज्ञानपदस्य कर्तृसाधनत्वं भावसाधनत्वे दोषप्रदर्शनद्वारा प्रकटयति । पारतन्त्र्यमिति । ज्ञानक्रिया ज्ञानशब्देनोक्ता चेज्ज्ञानस्य परतन्त्रत्वादनित्यत्वाद्ब्रह्मणोऽपि ज्ञानं ब्रह्मेति सामानाधिकरण्यात्तदभेदादनित्यत्वादिमसङ्गात्कर्तृसाधनं ज्ञानपदमित्यर्थः । तर्कशास्त्रावष्टम्भाच्च कर्तृत्वमात्मनः स्वीकर्तव्यमित्याह । तर्केति ॥ ८७ ॥

उच्चैर्बाहुं समुद्धृत्य इत्याहुश्चोद्यचुञ्चवः ।
यथोदितमिदं सर्वं नैतदेवं भवेत्कुतः ॥ ८८ ॥

ज्ञानकर्ताऽऽत्मैव ब्रह्म नान्यद्ब्रह्मास्तीति पूर्वपक्षमुपसंहरति । उच्चैरिति । ज्ञानस्य कार्यत्वमङ्गीकृत्य कर्तृत्वमात्मनः शङ्कितं शिथिलयति । यथोदितमिति । ज्ञानस्य कार्यत्वासंभवे कथं कार्यत्वप्रतीतिरिति पृच्छति । कुत इति ॥ ८८ ॥

स्वरूपाव्यतिरेकेऽपि कार्यत्वमुपचारतः ।
बुद्ध्युपाश्रयकार्याणि कल्प्यन्तेऽत्राविवेकतः ॥८९॥

संवेदनापरपर्यायस्य ज्ञानस्याऽऽत्मस्वरूपाभेदेऽपि कार्यत्वमौपचारिकमित्युत्तरमाह । स्वरूपेति । कार्यत्वस्यौपचारिकत्वं स्फोरयति । बुद्धीति । अत्र हि संवेदने बुद्धिवृत्त्यविवेकात्तद्गतान्येव जन्मविनाशादीनि कार्याणि कल्प्यन्ते वस्तुतस्तु न तत्र जन्मादयो विकाराः सन्ति तेन कूटस्थे संवेदने कार्यत्वमारोपितमित्यर्थः ॥ ८९ ॥

स्वरूपमात्मनो ज्ञानं न तस्माद्व्यतिरिच्यते ।
बुद्धेः प्रत्ययकारित्वं तत्साक्षिण्युपचर्यते ॥ ९० ॥

यत्त्वात्मनो ज्ञानं प्रति कर्तृत्वमुक्तं तद्दूषयति । स्वरूपमिति । वृत्तिमदन्तःकरणोपाधिकमात्मनि कर्तृत्वमारोपितमित्यर्थः ॥ ९० ॥

---

१ (ग.) °त्परब्र°। २ (ग. घ.) °नस्तुतत्क°। ३ (ग. च.) कल्प्यन्ते ।

आत्मचैतन्यसंव्याप्ता वृत्तीर्धीः कुरुते यतः ।
चैतन्यालिङ्गिताः सर्वास्तप्तायोविस्फुलिङ्गवत् ॥९१॥

कूटस्थमात्मसंवेदनं बुद्धिवृत्त्युपाधिकं कार्यत्वमास्कन्दतीत्युक्तं विवृणोति । आत्मेति । यथा तप्तस्यायसो विस्फुलिङ्गा वह्न्याकारा दृश्यन्ते तथा परिणामिनी बुद्धिरात्मचैतन्येन व्याप्ता सती नानाविधा वृत्तीश्चैतन्याभासव्याप्ता यतो निर्वर्तयत्यतो[2] बुद्धिवृत्त्युपाधिचैतन्यं[3] कार्यत्वेन भातीत्यर्थः ॥ ९१ ॥

चैतन्यखचितान्दृष्ट्वा प्रत्ययान्बुद्धिकर्तृकान् ।
ज्ञानं क्रियत इत्यज्ञाः कूटस्थमपि मन्वते ॥९२॥

यत्तु वृत्तिमदन्तःकरणोपाधिकमात्मचैतन्यं कर्तृत्वेन भातीति तदुपपादयति । चैतन्येति ॥ ९२ ॥

आविर्भावतिरोभावौ बुद्धेर्यत्साक्षिकौ नृणाम् ।
ततोऽन्यं कं समाश्रित्य साक्षिकर्तृत्वमुच्यते ॥ ९३ ॥

बुद्धेः प्रत्ययकारित्वं तत्साक्षिण्युपचर्यत इत्युक्तमधुना प्रपञ्चयति । आविर्भावेति ॥ ९३ ॥

बुद्धिभावानवच्छिन्नं तादृग्रूपं यथा पुरा ।
बुद्ध्युत्पत्तावपि तथाऽविक्रियं ह्यनुभूयताम् ॥ ९४ ॥

आत्मनः संविदात्मकस्य कर्तृत्वकार्यत्वयोरारोपितत्वे कूटस्थत्वं फलतीत्याह । बुद्धीति । यथाहि पूर्वं बुद्ध्युपाध्युत्पत्तेस्तद्भावेनानवच्छिन्नमेकरूपमेव बुद्ध्यभावसाधकमवतिष्ठते तथा बुद्ध्युत्पत्तावपि तद्भावसाधकमेकरूपमेव चैतन्यमास्थेयं बुद्धिभावाभावयोरपि साधके साक्षिचैतन्ये विशेषस्य दर्शयितुमशक्यत्वादतश्च कूटस्थमेव चैतन्यमनुभवबलादास्थेयं तस्य सर्वक्रियासाधकत्वादित्यर्थः॥ ९४ ॥

कर्तृकार्यावभासित्वात्कर्तृकार्याभिधायिनः ।
लक्षयन्ति परं ब्रह्म नाञ्जसा तत्प्रचक्षते ॥ ९५ ॥

वाच्यत्वाद्घटादिवदेव सक्रियं ब्रह्म न कूटस्थमित्याशङ्क्याऽऽह । कर्त्रिति । कर्तृकर्मादीनां कारकाणां साक्षित्वेन ब्रह्मणो भासकत्वात्कर्त्रादिवाचिनः सत्यादिशब्दा ब्रह्म परं लक्षयन्ति । न तु साक्षाद्वक्तुमुत्सहन्ते शब्दप्रवृत्तिनिमित्तानां जात्यादीनां ब्रह्मण्यसत्त्वादतो[9] वाच्यत्वं ब्रह्मण्यसिद्धमित्यर्थः ॥ ९५ ॥

---

१ ( ग. ङ. ) °न्दयती° । २( ग. घ. च. )°तो वृ° ।३( च. )°न्यंकर्तृत्वे° । ४(ग.) घ. ) बुद्ध्यभा° । ५ ( ग. घ. ) °स्तदभा° । ६ (क.) °मेकं चै° ( च. ) °मेकचै° । ७ (ङ. च.) °वेविक्रि° । ८ (ग. घ.) °ह्म कर्तृ । ९ (ग. घ.) °तोऽवाच्यत्वं ब्रह्मणः सि° ।

यत्तु तद्ब्रह्मणो ज्ञानं सर्वानन्यदविक्रियम् ।
ब्रह्मणोऽव्यतिरिक्तं तत्सर्वप्रत्यक्समाप्तितः ॥ ९६ ॥

ज्ञानशब्दस्य ब्रह्मणि लक्षणया प्रवृत्तिं प्रकटयति । यत्त्विति । ब्रह्मणो यत्तज्ज्ञानं चैतन्यं न च षष्ठीप्रयोगाद्ब्रह्मणस्तद्भिद्यते तद्धि ब्रह्मणः सकाशादव्यतिरिक्तं ज्ञानव्यतिरेके जडत्वाद्ब्रह्मणोऽब्रह्मत्वप्रसङ्गात्तच्च ब्रह्मात्मकं ज्ञानं सर्वानन्यदद्वितीयं ब्रह्मणः सर्वानन्यत्वादतश्चाविक्रियं विक्रियाहेत्वभावाच्च सर्वत्र प्रत्यक्त्वेन वर्तते तत्र तत्राऽऽत्मत्वेन समाप्तत्वादतो ज्ञानपदं ब्रह्मणि लक्षणयैव वर्तते तत्र जात्यादेरसंभवादित्यर्थः ॥ ९६ ॥

प्रत्याख्याताखिलानात्मभेदसत्यार्थवाचिना ।
तथैव सत्यशब्देन लक्ष्यते तन्न तूच्यते ॥ ९७ ॥

सत्यपदस्यापि ब्रह्मणि लक्षणयैव प्रवृत्तिं प्रत्याययति । प्रत्याख्यातेति । निरस्तः समस्तोऽनात्मविशेषोऽनृतवर्गो यस्मिन्परमार्थार्थे तस्य वाचकेन सत्यशब्देनापि ज्ञानशब्देनेव ब्रह्म लक्ष्यते न तु तत्तेन वक्तुं शक्यते निमित्ताभावस्य तुल्यत्वादित्यर्थः ॥ ९७ ॥

एवं सत्यादयः शब्दाः स्वार्थासंत्यागिनः परम् ।
लक्षयन्ति विरुद्धार्थनिवृत्त्याऽज्ञानहानतः ॥ ९८ ॥

सत्यज्ञानशब्दवदानन्दादयोऽपि शब्दलक्षणयैव ब्रह्म बोधयन्तीत्याह । एवमिति । सर्वे खल्वेते शब्दाः स्वार्थस्य परमार्थत्वं ज्ञानवत्त्वमानन्दत्वं पूर्णत्वमित्यस्य स्वार्थस्यापरित्यागिनो भूत्वा विरुद्धार्थप्रतीतिहेत्वज्ञाननिरासद्वारा विरुद्धस्यार्थस्यानृतजडदुःखपरिच्छेदनिवृत्तिवर्त्मना परं ब्रह्म लक्षयन्ति न तु साक्षादेव ब्रह्म वक्तुं क्षमन्ते प्रागुक्तन्यायविरोधादित्यर्थः ॥ ९८ ॥

---

१ (ग. घ.) °न्न सूच्यं । २ (ग. घ. च.) °त्मवर्गोऽनृ° । ३ (क.) °वृत्त्यज्ञा° । ४ (ङ.) °डस्य दुः° । ५ (घ. ङ. च.) °दलक्षणस्य नि° ।

निवर्त्यभेदाद्भिन्नोऽर्थोऽसत्याद्यर्थनिवर्तिनाम् ।
सत्यादीनामतः सिद्धमवाक्यार्थत्वमात्मनः ॥ ९९ ॥

सत्यादिशब्दाः स्वार्थासंत्यागिनश्चेत्स्वार्थानां सत्यादीनां भेदाद्गवानयनादिवाक्यवदस्मिन्नपि सत्यादिवाक्ये वाक्यार्थः*संसर्गः संसृष्टो वा स्यादित्याशङ्क्याऽऽह । निवर्त्येति । सत्यादिशब्दानामसत्याद्यर्थनिवर्तकत्वेनोक्तानां निवर्त्यभेदादेव यद्यपि भिन्नोऽर्थोऽभ्युपगम्यते तथापि विरुद्धार्थं परिहारायालक्ष्ये ब्रह्मणि तेषां पर्यवसानादात्मनो ब्रह्मणः सत्यादिवाक्यार्थस्य संसर्गसंसृष्टाभ्यामन्यत्वेनैकरस्यं वाक्यादेव सिध्यतीत्यर्थः ॥ ९९ ॥

यतो वाचो निवर्तन्ते नेति नेतीति चापरम् ।
एवं सत्यर्थवत्सर्वमन्यथा तदनर्थकम् ॥ १०० ॥

यत्प्रत्यग्ब्रह्मणः शब्दाविषयत्वं जातिमत्त्वादिविशेषशून्यत्वादुक्तं तथैव तस्मिन्नभ्युपगते सत्यविषयत्वस्य निर्विशेषत्वस्य च प्रतिपादकं वाक्यजातमुपपन्नार्थं ब्रह्मणोऽविषयत्वे विशेषवत्त्वे चानुपपन्नार्थमप्रमाणमेव तदापद्येतेत्यात्मनो विषयत्वाद्यभावे प्रमाणमाह । यत इति ॥ १०० ॥

कौटस्थ्यं सत्यमित्युक्तं तद्गुणं ज्ञानमुच्यते ।
स्वतो बोधस्य कौटस्थ्ये ज्ञातुरानन्त्यमेकता ॥ १ ॥

सत्यादिशब्दानां ब्रह्मणि लक्षणया बोधकत्वमुपपाद्य पदार्थत्रयमुक्तमुपसंहरति । कौटस्थ्यमिति । तदेव सत्यं गुणो यस्य ज्ञानस्य तद्ज्ञानं तद्गुणं सत्यत्वं ज्ञानस्य स्वरूपमित्याह । तद्गुणमिति । सत्यत्वेनोक्तस्य ज्ञानस्य स्वारस्येन कौटस्थ्ये स्थिते त्रिविधमानन्त्यं तस्य सिध्यतीत्याह । स्वत इति । यथोक्तं ज्ञानं ज्ञातुः साक्षिणो ब्रह्मणः स्वरूपं तस्याऽऽनन्त्यं कीदृगित्यपेक्षायामुक्तम् । एकतेति ॥ १ ॥

---

१ (क. ख.) °द्भिन्नार्थो°। २ (क. ख.) °भिन्नार्थो°। ३ (क. ख.) °द्धार्थप°। ४ (ग. घ. च.) °यत्तु प्रत्य°। ५ (क. ख.) °दकवा°। ६ (ग. घ.) °स्य त°।

* पदार्थानां परस्परसंसर्गः संबन्धः स एव वाक्यार्थ इत्यभिधानवादिनो भट्टाः । परस्परं संबद्धाः संसृष्टाः पदार्था एव संसृष्टसंज्ञको वाक्यार्थ इत्यभिहितान्वयवादिनः प्रभाकराः । इति मीमांसकमते द्विविधो वाक्यार्थः ।

ज्ञातृभेदात्तु तद्ब्रह्म ह्यनीप्सिततमं परम् ।
ज्ञातुरन्यस्य चाभावाद्यो वेदेत्युच्यते कथम् ॥ २ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेतिवाक्यमेवं व्याख्याय समनन्तरवाक्यगतं यो वेदेति भागमाक्षिपति । ज्ञातृभेदादिति । तद्धि प्रकृतं ब्रह्म[1] ज्ञानात्मत्वेन वर्तते ज्ञानकर्तुः सकाशादभिन्नत्वाभ्युपगमान्न च तस्य ज्ञानकर्तृ[2]त्वमविक्रियत्वान्न च ब्रह्मातिरेकेण ज्ञाताऽभ्युपगम्यते न चैकत्र कर्मकर्तृभावः संभवत्यतो यो वेदेत्यनुपपन्नमित्यर्थः ॥ २ ॥

सत्यादिलक्ष्याज्ञानोत्थाऽसत्याद्यर्थनिषेधधीः ।
वर्त्मनैवाप्तमाप्नोति केवलाज्ञानहानतः ॥ ३ ॥

सत्यादिशब्देन यद्ब्रह्म लक्ष्यते तदज्ञानोत्थं यदसत्यादि तन्निषेधिका याऽहं ब्रह्मास्मीत्यविषयाकारा धीरुत्पद्यते तया प्राप्तमेव ब्रह्माप्राप्तिहेत्वज्ञाननिवृत्त्या प्राप्नोतीत्युपचारा[3]दुच्यते[4]ऽत्र कर्मकर्तृत्वस्याविवक्षितत्वान्नैवमिति परिहरति । सत्यादीति ॥ ३ ॥

एवं ज्ञातं विजानाति विमुक्तश्च विमुच्यते ।
निवर्तते निवृत्तं च त्रिर्वः शपथयाम्यहम् ॥ ४ ॥

नन्वज्ञातं ब्रह्म ज्ञायते बद्धं च मुच्यते निवर्तते च निवृत्तमेवाज्ञानं तथैवाप्राप्तमेव ब्रह्म प्राप्तुं युक्तं तत्राऽऽह । एवमिति । प्राप्तप्राप्तिवदिति यावत् । ब्रह्मैव सन्ब्रह्माप्येति प्रज्ञानं ब्रह्म विमुक्तश्च[6] विमुच्यते । एकमेवाद्वितीयमित्यादिशास्त्रमत्र प्रमाणमित्यभिप्रेत्याऽऽह । त्रिरिति ॥ ४ ॥

तस्मादासन्नकर्तृत्वातिमिरोऽयमविद्यया ।
सत्यादिलक्षणं ब्रह्म प्रत्यक्स्थमपि नेक्षते ॥ ५ ॥

अज्ञानादेर्नित्यनिवृत्तत्वे किमिति सर्वदा ब्रह्मणि न प्रतिपत्तिरित्याशङ्क्याऽऽह । तस्मादिति । निवृत्तस्यैवाज्ञानादेरनिवृत्तवद्भानादिति यावत् ॥ ५ ॥

अतोऽविद्यानिषेधेन सदा विस्फुरि[7]तेक्षणः ।
पिबञ्ज्ञात्रादि नानात्वं प्रत्यगात्मानमीक्षते ॥ ६ ॥

आसन्नत्वमारोपितत्वमविद्याध्यस्तकर्तृत्वादिकृतं प्रत्यग्ब्रह्मणोऽस्फुरणमिति स्थिते फलितमाह । अत इति ॥ ६ ॥

---

१ (ङ.) °ह्म ज्ञेयत्वेन न व° । २ (ग. घ. ङ. च.) °कर्तृस° । ३ (ग. घ.) °रादत्र । ४ (ख.) °ते तत्र । ५ (च.) °तिमावः। न° । ६ (ग. घ.) °श्च मु° । ७ (ङ.) विस्फारि° ।

भूतमात्रोपसंश्लेषसमुत्थं यत आत्मनः ।
कर्तृभोक्तृत्वविज्ञानं बुद्धौ तन्निहितं ततः ॥ ७ ॥

एवं यो वेदेतिवाक्यभागे संभवत्यपि निहितशब्दो न संभवति कुण्डे बदरवद-नाधारत्वाद्ब्रह्मणो बुद्धौ निहितत्वासिद्धेरित्याशङ्क्याऽऽह। भूतमात्रेति । भौतिकमन्तःकरणं भूतमात्राशब्देनात्र गृह्यते । अविद्याध्यस्तबुद्धिसंबन्धकृतकर्तृत्वादिधर्मवत्वादात्मनो बुद्धौ निहितत्वोक्तिरित्यर्थः ॥ ७ ॥

तमोरजोविनिर्मुक्तं तद्वृत्त्या चोपलभ्यते ।
ब्रह्मातो निहितं बुद्धौ मनसैवेति च श्रुतिः ॥ ८ ॥

सात्त्विकबुद्धिवृत्त्याऽहं ब्रह्मास्मीति वाक्योत्थया ब्रह्मणो दर्शनाद्ब्रह्मबुद्धिस्थमुक्तमितिपक्षान्तरं सप्रमाणमाह । तम इति ॥ ८ ॥

निगूढमस्यां तद्ब्रह्म कामाविद्याद्युपप्लवात् ।
प्रत्यग्धियोऽनुपश्यन्ति तस्माद्बुद्धिर्गुहोच्यते ॥ ९ ॥

निहितशब्दार्थमित्थमुक्त्वा बुद्धेर्गुहात्वं साधयति । निगूढमिति ॥ ९ ॥

परमं व्योम हार्दं स्याद्बाह्यात्तत्परमं यतः ।
श्रुतेर्योऽयं बहिर्धेति तत्र बुद्धेः समाश्रयम् ॥ १० ॥

परमे व्योमन्नित्यस्यार्थमाह । परममिति । हृदयावच्छिन्नं भूताकाशं परमं व्योमेत्यत्र प्रमाणमाह । श्रुतेरिति । उक्ते हृदयाकाशे या गुहा बुद्धिस्तस्यां ब्रह्म नित्यं सन्निहितमिति सप्तम्यर्थं सूचयति । तत्रेति ॥ १० ॥

गुहायां परमे व्योमन्वस्तुवृत्तमपेक्ष्य वा ।
सत्यादिलक्षणान्नान्यद्धियः प्रत्यक्प्रतीयते ॥ ११ ॥

परमे व्योमन्नित्यस्यार्थान्तरमाह । गुहायामिति । अन्तःकरणे कार्यापेक्षया प्रकृष्टं व्योमाव्याकृताकाशमज्ञातं ब्रह्म तत्र कार्यकारणविनिर्मुक्तं शुद्धं ब्रह्म व्यवस्थितमिति वास्तवं वृत्तमपेक्ष्य वाचोयुक्तिरित्यर्थः । वस्तुवृत्तमपेक्ष्योक्तमेव व्यनक्ति । सत्यादीति । अन्तःकरणात्कार्यभूतात्प्रत्यगान्तरं यदज्ञातं ब्रह्मकारणं तत्र सत्यज्ञानानन्तानन्दात्मैकातपरिशुद्धात्कार्यकारणविरुद्धाद्ब्रह्मणोऽन्यन्न प्रामाणिकमस्तीत्यतो बुद्धिगुहायां परमं व्योमाज्ञातं ब्रह्म तत्स्वरूपत्वेन स्थितं तत्र कार्यकारणविलक्षणं ब्रह्म निहितमित्यर्थः ॥ ११ ॥

---

१ (ख.) °तवत्कृत्वा° । २ (ग. घ. ङ. च. ) °त्त्या ब्र° । ३ (ग. घ. च.) °च्छिन्नभू° । ४ (ग. घ.) °यावका° ५ (ग. घ. ) °तात्प्रमाणान्त° । ६ (ग. घ. ) °त्मकत्वात्प° । ७ (ग. घ.) °कत्वम° ।

सत्याद्यर्थविरुद्धेभ्यः सम्यग्व्यावृत्तधीर्यतिः।
धियः प्रत्यक्प्रविश्याथ सत्यात्मानं प्रपश्यति ॥१२॥

बुद्धिकारणे ब्रह्मण्यज्ञाते कार्यकारणविनिर्मुक्तस्य ब्रह्मणोऽवस्थानकथनप्रयोजनमाह। सत्यादीति। अनृतजडपरिच्छिन्नदुःखेभ्यः संशयविपर्यासव्यतिरेकेण व्यावृत्तबुद्धिरुत्तमो ज्ञानाधिकारी धियोऽन्तःकरणात्प्रतीचि कारणे ब्रह्मणि प्रविश्य कार्यमात्रस्य तदुपाधिकाभावस्य च तदतिरेकेणाभावमालोच्याऽज्ञातस्य ब्रह्मणोऽपि कारणस्य कार्यकारणविलक्षणब्रह्मव्यतिरेकेणाभावं ज्ञात्वा सत्यज्ञानानन्तानन्दात्मकं ब्रह्मैव बुद्धिसाक्षिणस्तत्त्वमिति निश्चिनोतीत्यर्थः॥१२॥

तस्मादुपायसिद्ध्यर्थं बुद्धेः प्रत्यक्प्रवेशनम्।
गुहायां परमे व्योमञ्श्रुतिरस्मानतोऽन्वशात् ॥१३॥

यस्मादेवं बुद्धिकारणे निहितं ब्रह्मेत्युक्ते बुद्धिसाक्षिणो ब्रह्मत्वं सिध्यति तस्माद्बुद्धेः प्रतीचि कारणे कार्यकारणविलक्षणब्रह्मप्रवेशनं निहितं गुहायामित्याद्या श्रुतिरहं ब्रह्मास्मीतिप्रतिपत्त्युपायत्वेनानुशास्त्यतो यो वेदेत्याद्या श्रुतिरुपपन्नार्थेत्याह। तस्मादिति॥ १३॥

ज्ञातुर्ज्ञेयं परं ब्रह्म भेदबुद्ध्यपनुत्तये।
गुहायां परमेव्योमञ्ज्ञेयं ज्ञातरि शिष्यते॥ १४॥

संप्रति प्रथमव्याख्यानमेवानुसृत्य वाक्यार्थं कथयति। ज्ञातुरिति। आत्मनो बुद्धिसाक्षिणो ज्ञेयं परं ब्रह्मेत्युक्ते तयोर्भेदबुद्धिरुपजायते तन्निवृत्त्यर्थं बुद्धौ बाह्याकाशापेक्षया प्रकृष्टं यदाकाशं तत्र निहितं ब्रह्मेत्युच्यते तथा च ज्ञेयं ब्रह्म साक्षिणि तावन्मात्रमवशिष्यते सोऽपि साक्षी ब्रह्ममात्रमिति न तयोर्भेदशङ्काऽस्तीत्यर्थः॥ १४॥

साध्यसाधनसंबन्धवर्त्मनैवानुधावतः।
साध्यसाधननिर्मुक्तं स्वात्मन्याविशते परम् ॥१५॥

ज्ञातृज्ञेययोर्जीवब्रह्मणोरभेदे जीवस्य संसारित्वाद्ब्रह्मणोऽपि संसारित्वप्रसङ्गात्तत्प्राप्तिरसमीहिता स्यादित्याशङ्क्याऽऽह। साध्येति। यागादिना स्वर्गादि साध्यमितिसाध्यसाधनसंगतिद्वारेण प्रवृत्तस्य संसारिणस्तदुभयविलक्षणं परं ब्रह्म स्वरूपत्वेन यदा प्राप्तं भवति तदा संसारिणोऽपि संसारित्वं निवर्तते तत्कथं तद्द्वारा ब्रह्मणः संसारित्वं शङ्कितुं शक्यमित्यर्थः॥ १५॥

---

१ (ग.) °विकस्य। २ (ग. घ. ङ.) °क्षणं ब्र°। ३ (ग. च.) °ह्मपि°। ४ (ख. ङ. च.) °र्भेद्राश°। ५ (ग. च.) °सं संभ°।

सोऽश्नुते निखिलान्कामान्कर्तृत्वे तदसंभवम् ।
आशङ्क्य ब्रह्मणेत्याह युगपत्स्यात्सहेति च ॥१६॥

ब्रह्मात्मैकत्वविदशेषं पुरुषार्थमाप्नोतीत्यस्मिन्नर्थे सोऽश्नुते सर्वान्कामानिति-वाक्यैकदेशं व्याचष्टे । सोऽश्नुत इति । कर्तृत्वे सर्वपुरुषार्थसिद्धिर्न संभवतीत्याशङ्क्य तस्याविद्याध्यारोपितत्वाद्ब्रह्मरूपेण विदुषः सर्वपुरुषार्थसिद्धिरविरुद्धेत्युत्तरवाक्यावष्टम्भेन दर्शयति । कर्तृत्व इति । सहशब्दार्थमाह । युगपदिति ॥१६॥

प्रतीचि न स्यात्तद्ब्रह्म भेदार्था चेत्सहार्थता ।
संभाव्यते पराग्भूतं नापि सत्यादिमत्परम् ॥ १७ ॥

सहशब्दस्य यथाश्रुतार्थत्वं किं न स्यादित्याशङ्क्याऽऽह । प्रतीचीति । सहशब्दस्य मुख्यार्थत्वे सत्यात्मब्रह्मणोर्भेदाद्भेदार्थता सहशब्दस्य स्यादेवं सहशब्दश्रुतिर्भेदार्था ततश्च सहशब्दस्य भेदेनार्थेनार्थवत्तेति चेदुच्यते तदात्मनि स्वरूपभूतं[1] ब्रह्म न सिध्यति तथा च तत्त्वमस्यादिवाक्यविरोधाद्युगपदर्थतायाः सहशब्दस्य युक्तत्वादेकस्मिन्नेव क्षणे सर्वान्पुरुषार्थान्ब्रह्मरूपेण ब्रह्मविदनुभवतीत्यर्थः । आत्मनः सकाशाद्ब्रह्मणो भेदे दोषान्तरमाह । संभाव्यत इति ॥१७॥

नापि नोत्सहते वक्तुं निपातत्वात्सहार्थताम् ।
तस्माद्युगपदर्थस्य वाचकं स्यात्सहेति यत् ॥ १८ ॥

सहशब्दस्य युगपदर्थे सामर्थ्याभावान्न तदर्थत्वमित्याशङ्क्याऽऽह । नापीति । सहशब्दः सहार्थतां वदन्युगपदर्थं वक्तुं नैव शक्नोतीति न निपातानामनेकार्थत्वादस्य च निपातत्वादित्यर्थः । फलितमुपसंहरति । तस्मादिति ॥ १८ ॥

ज्ञानादसत्याद्युच्छित्तेरात्मनोऽन्यन्न विद्यते ।
तस्माद्विपश्चिद्ब्रह्मभ्यां कामान्सर्वान्सहाश्नुते ॥ १९ ॥

सहशब्दस्य युगपदर्थत्वेऽपि यौगपद्यस्य भेदसापेक्षत्वाद्भेदमसक्तिरित्याशङ्क्याऽऽह । ज्ञानादिति । अहं ब्रह्मास्मीति ज्ञानादज्ञाननिवृत्त्या तत्कार्यासत्यपरिच्छेदादिनिवृत्तेः साक्षात्कृतब्रह्मा ब्रह्मविदात्मरूपेण ब्रह्मरूपेण च सर्वानानन्दान्यौगपद्येनानुभवति । अविद्यावस्थायामुपाध्यवच्छेदाद्विभक्तवदभिव्यक्तेर्बहूक्तिरित्यर्थः ॥ १९ ॥

---

१ ( क.ख. ) °द्धिरित्यवि° । २ ( ग.घ. ) °तं दृश्यं मिथ्या च रूप्यवत् ॥१७॥ ३ ( ङ. ) °भूते ब्र° । ४ ( च. ) °क्षाद्ब्रह्म° । ५ ( घ. ) °ब्रह्मवि° ।

ज्ञातुर्हार्दगुहान्तस्थं प्रतीचोऽन्यन्न लभ्यते ।
सत्यादिमदतो ब्रह्म प्रत्यगात्मैव तद्विदः ॥ २० ॥

विपश्चिद्ब्रह्मभ्यामित्युक्तत्वाद्विद्ब्रह्मणोर्भेदः स्यादित्याशङ्क्याऽऽह । ज्ञातुरिति । यो वेद निहितं गुहायामिति ब्रह्मणो बुद्धिस्थत्वाभिधानादात्मनश्च तथात्वात्तयोर्भेदगन्धोऽपि नास्तीत्यर्थः ॥ २० ॥

विपश्चिद्व्यतिरेकेण ज्ञेयत्वाद्यपनुत्तये ।
सामानाधिकरण्येन ब्रह्मणा ह विपश्चिता ॥ २१ ॥

विद्ब्रह्मणोर्भेदाभावे हेत्वन्तरमाह । विपश्चिदिति । ज्ञेयत्वादीत्यादिशब्दे न प्राप्यत्वं ब्रह्मणो गृह्यते ॥ २१ ॥

एकयाऽक्रमवर्तिन्या व्याप्नोति क्रमवर्तिनः ।
अवगत्याखिलान्कामान्योऽकाम इति च श्रुतिः ॥२२॥

सर्वान्कामान्समश्नुत इत्यस्यार्थमनूद्य तत्रैवार्थे श्रुत्यन्तरसंवादं दर्शयति । एकयेति । विदुषो विषयसुखप्राप्तौ सक्रियत्वमाशङ्क्यावगतिं विशिनष्टि । अक्रमवर्तिन्येति ॥ २२ ॥

आदावन्ते तथा मध्ये धियोऽनेकशरीरगाः ।
निर्विशेषैकचिद्व्याप्ता ह्यनन्यानुभवात्मना ॥ २३ ॥

अवगतेरुक्तं कूटस्थत्वं साधयति । आदाविति ॥ २३ ॥

सर्वप्रवृत्तिहेतूंश्च यस्माद्ब्रह्मविदश्नुते ।
कामान्ब्रह्मविदस्तस्मान्न प्रवृत्तिरहेतुतः ॥ २४ ॥

ब्रह्मविदोऽपि प्रवृत्तिमिच्छतां यथोक्तश्रुतिविरोधः स्यादित्यार्थिकं वाक्यतात्पर्यमाह । सर्वप्रवृत्तीति । विदुषा सुखानां कामशब्दितानामाप्तत्वात्तस्य कामाभावात्तन्निबन्धना प्रवृत्तिर्न सिध्यतीत्यर्थः ॥ २४ ॥

अविद्याहेतवः कामाः काममूलाः प्रवृत्तयः ।
धर्माधर्मौ च तन्मूलौ देहोऽनर्थाश्रयस्ततः ॥ २५ ॥
अतोऽविद्यानिरोधे स्यान्निरोधो विदुषः सदा ।
निःशेषकर्महेतूनां विकाराणां तदैव तु ॥ २६ ॥

ब्रह्मविदो विद्ययाऽविद्यानिवृत्त्या कामादिनिवृत्तिरयत्नतः सिध्यतीत्येतदुपपादयति । अविद्येत्यादिना ॥ २५ ॥ २६ ॥

---

१ ( क. ख. ) °हार्दं गु°। २ ( क. ख. ) °लक्ष्यते । ३ ( क. ) °णा हि वि°। ४ ( ङ. ) °विपश्चिद्ब्र°। ५ ( ग. घ. ) °दो ब्रह्मवि°।

कृत्स्नोपनिषदर्थस्य सूत्रमित्यभ्यधात्पुरा ।
संक्षेपतस्तदर्थश्च सम्यङ्मन्त्रेण वर्णितः ॥ २७ ॥

तस्माद्वा एतस्मादित्यादेरुत्तरस्य संदर्भस्य संबन्धं वक्तुं वृत्तं कीर्तयति । कृत्स्नेति । ब्रह्मविदाप्नोति परमितिवाक्यं वल्लीद्वयार्थस्य ब्रह्मणस्तज्ज्ञानस्य तत्फलस्य च सूत्रमिति भाष्यकृदुक्तवान् । तच्च सूत्रितमर्थत्रयं सत्यमित्यादिना मन्त्रेण संशयविपर्ययापोहेन संक्षेपतो व्याख्यातमित्यर्थः ॥ २७ ॥

अनेन त्वाद्यसूत्रेण यावानर्थोऽत्र सूत्रितः ।
आसमाप्तेरियं वृत्तिस्तस्मादित्युच्यतेऽधुना ॥ २८ ॥

ब्रह्मविदाप्नोति परमितिसूत्रेण योऽर्थः सूत्रितो यश्च मन्त्रेण संक्षेपतो व्याख्यातस्तस्यार्थस्य प्रपञ्चनार्थं तस्मादित्यादिसमाप्तिपर्यन्तं ग्रन्थजातमिति संबन्धं दर्शयति । अनेनेति ॥ २८ ॥

सत्यं ज्ञानमनन्तं च रसादेः पञ्चकात्परम् ।
स्यामदृश्यादिशास्त्रोक्तमहं ब्रह्मेति निर्भयम् ॥ २९ ॥

समुदायतात्पर्यमुक्त्वा मन्त्रोक्तमनुवदति । सत्यमिति ॥ २९ ॥

ननु सत्यमनन्तं च कथं सम्यक्प्रतीयते ।
देशकालादिहेतुत्वात्तदिदानीं विभाव्यते ॥ ३० ॥

कोशपञ्चकविलक्षणं सत्यज्ञानानन्तानन्दात्मकं निर्विशेषं निर्भयं ब्रह्मात्मेत्यात्मब्रह्मणोरैक्ये मन्त्रेणोक्ते चोदयति । नन्विति । सर्वपदार्थानां त्रिधा परिच्छिन्नत्वाद्ब्रह्मणोऽपि वस्तुत्वेन विभक्तत्वाद्रज्जुसर्पवदेव सत्यत्वायोगादसत्यत्वादेव जडत्वादुक्तो मन्त्रार्थो न सिध्यतीत्यर्थः । सर्वजगत्कारणत्वाद्ब्रह्मणस्त्रिविधमानन्त्यं सिध्यत्यतश्च सत्यत्वं ज्ञानत्वं च तस्मिन्नुपपद्यते तच्चानन्त्यं सर्वकारणत्वकृतमनन्तरमेव प्रकटीकर्तव्यमिति परिहरति । देशेति ॥ ३० ॥

वस्तुतो देशतश्चैव कालतश्च त्रिधोच्यते ।
आनन्त्यं ब्रह्मणश्चातः सत्याद्यपि च सिध्यति ॥३१॥

तदिदानीं विभाव्यत इत्युक्तं प्रपञ्चयति । वस्तुत इति । अतःशब्दादुपरिष्टाच्च शब्दः संबध्यते परिच्छिन्नस्यैवासत्यत्वजडत्वदर्शनान्नापरिच्छिन्ने तत्प्राप्तिरित्यर्थः ॥ ३१ ॥

---

१ (क. ख.) °सूचितः । २ (क. ख.) °त्वात्तद्व° ।

अनन्तं देशतो व्योम देशवत्प्रकृतित्वतः ।
कारणैनैकदेशं हि कार्यं नान्यत्र वर्तते ॥३२॥

आकाशवदेव ब्रह्मणोऽनन्तत्वं न निरङ्कुशमित्याशङ्क्य वैषम्यमाह । अनन्तमिति । देशवतां पृथिव्यादीनामुपादानत्वेऽपि कथमाकाशस्य देशतोऽनन्तत्वमित्याशङ्क्य कार्याणां सर्वेषामाकाशेऽन्तर्भावादित्याह । कारणेनेति ॥ ३२ ॥

कार्यत्वात्कालतो नास्य वस्तुतश्च विहाय सः ।
वस्त्वन्तरस्य सद्भावादानन्त्यं वस्तुतोऽपि न ॥३३॥

तर्हि तथैव कालतो वस्तुतश्च तस्याऽऽनन्त्यं नेत्याह । कार्यत्वादिति । वस्तुतश्चाऽऽकाशस्य नाऽऽनन्त्यमित्युक्तं स्पष्टयति । वस्त्वन्तरस्येति । आकाशव्यतिरिक्तस्य ब्रह्मणः सद्भावादित्यर्थः ॥ ३३ ॥

कालाकाशादियोनित्वात्सर्वात्मत्वात्तथाऽऽत्मनः ।
वस्त्वन्तरस्य चासत्वान्मुख्यानन्त्यं परात्मनः ॥३४॥

ब्रह्मण्याकाशाद्वैषम्यं दर्शयन्नाह । कालेति ॥ ३४ ॥

कल्पितेन परिच्छेदो न ह्यकल्पितवस्तुनः ।
कल्पितश्चेह कालादिर्वाचारम्भणशास्त्रतः ॥३५॥

कार्येण कालादिना परिच्छिन्नस्य ब्रह्मणो न युक्तं मुख्यमानन्त्यमित्याशङ्क्य कल्पितत्वात्कालादेर्नैवमित्याह । कल्पितेनेति । कल्पितत्वमेव कालादेरसिद्धं मानाभावादित्याशङ्क्याऽऽह । कल्पितश्चेति । विकारस्य वाचारम्भणत्वेन मिथ्यात्वाद्विकारत्वाच्च कालादेरपि मिथ्यात्वसिद्धिरित्यर्थः ॥ ३५ ॥

तस्मात्सत्यादि याथात्म्यं तस्मादित्येवमादिना ।
वक्ष्यते ब्रह्मणः सम्यक्सृष्टिव्याजेन यत्नतः ॥३६॥

तस्मादित्यादिना सृष्टिप्रतिपादनात्कार्यकारणप्रपञ्चस्य सत्यत्वसिद्धिरित्याशङ्क्य सृष्टिकथनव्याजेन ब्रह्मयाथात्म्यं सत्यत्वादिलक्षणं श्रुत्या प्रतिपाद्यते न तु सृष्टिरित्याह । तस्मादिति । ब्रह्मणस्त्रिविधमानन्त्यं कार्यकारणयोश्च कल्पितत्वमित्यस्यार्थस्य विवक्षितत्वादिति यावत् ॥ ३६ ॥

---

१ (च.) °त्वमित्या°।

तस्मादित्यादि वाक्योक्तं वैशब्दः स्मरणाय तु ।
एतस्मादितिमन्त्रोक्तं सत्यादिगुणलक्षितम् ॥३७॥

तस्मादित्यादिवाक्यस्यैवं तात्पर्यमुक्त्वा पदत्रयार्थं कथयति । तस्मा-
दिति ॥ ३७ ॥

तद्विद्विपश्चित्सामर्थ्यात्तदेतद्भ्यां प्रतीयते ।
आत्मश्रुतेर्न मुख्योऽर्थः प्रतीचोऽन्यत्र लभ्यते ॥३८॥

प्रकृतस्य ब्रह्मणस्तच्छब्दपरामृष्टस्य प्रत्यक्त्वेन सन्निहितत्वादेतच्छब्देनोपा-
दाने कारणमाह । तद्विदिति । ब्रह्मविदाप्नोति परमितिब्रह्मज्ञानमात्राद्ब्रह्मप्राप्तिश्रव-
णाद्ब्रह्मणा विपश्चितेति च ब्रह्मविदो विपश्चितो ब्रह्मणा सामानाधिकरण्यश्रवणाद्ब्र-
ह्मात्मनोरैक्यावगमात्पूर्वोक्तसामानाधिकरण्यसामर्थ्यात्तस्मादित्यत्रोक्ताभ्यां तदे-
तच्छब्दाभ्यां समानाधिकरणाभ्यां ब्रह्मात्मनोरभेदरूपं प्रत्यक्त्वं ब्रह्मणो भाति
तेन तस्मिन्नेतच्छब्दप्रयोगोपपत्तिरित्यर्थः । किंचास्मिन्वाक्ये ब्रह्मण्यात्मशब्द-
प्रयोगो दृश्यते स चाऽऽत्मत्वे सत्येव ब्रह्मणो युज्यते प्रतीचोऽन्यत्राऽऽत्मशब्द-
प्रयोगायोगादतो युक्तं ब्रह्मात्मनोरैक्यमित्याह । आत्मश्रुतेरिति ॥ ३८ ॥

मत्तः सर्वमिदं जातं मय्येवान्ते प्रलीयते ।
अहमेको बिभर्मीदमित्येवं च प्रसिध्यति ॥३९॥

किंच ब्रह्मणः सर्ववेदान्तेषु जगत्कारणत्वश्रवणादात्मनश्चाऽऽत्मा वा इदमेक
एवाग्र आसीदित्यादाविवात्र तदभिधानात्कारणद्वयस्यायुक्तत्वाज्जगत्कारणत्व-
लिङ्गाद्ब्रह्मात्मनोरैक्यं सिध्यतीत्याह । मत्त इति ॥ ३९ ॥

सर्वानन्याविकार्येकमकार्याकारणं परम् ।
ब्रह्मस्वभावमालम्ब्य सृष्टिर्वक्तुं न शक्यते ॥४०॥

आकाशः संभूत इत्यादिश्रुत्युक्तत्वादाकाशादिसृष्टिर्वास्तवील्याशङ्क्याऽऽह ।
सर्वेति ॥ ४० ॥

---

१ (ङ.) °मुख्यार्थः । २ (ग. घ.) प्रसक्तेन । ३ (ग. घ.) °णलि° ।

ब्रह्मणोऽन्यदतः सर्वं कार्यत्वेन विवक्ष्यते ।
ब्रह्मणोऽकारणत्वाच्च सृष्टौ हेतोरसंभवः ॥ ४१ ॥

न ब्रह्मस्वभावमनुसृत्य सृष्टिरुच्यते किंतु कारणानुरोधेनेत्याशङ्क्य कारणं ब्रह्मणोऽन्यदनन्यद्वेति विकल्प्य प्रथमं प्रत्याह । ब्रह्मणोऽन्यदिति । अतःशब्देन ब्रह्मातिरिक्तस्य सर्वस्य कार्यत्वे ब्रह्मान्यत्वमेव हेतूक्रियते तथाच मूलकारणत्वासिद्धिरितिशेषः । तर्हि ब्रह्मैव कारणमितिद्वितीयं पक्षमाशङ्क्याऽऽह । ब्रह्मण इति । अकारणत्वं कूटस्थत्वम् ॥ ४१ ॥

ब्रह्मस्वभावो हेतुश्चेत्सृष्टेस्तत्संनिधेः सदा ।
सर्वदा ब्रह्मवत्सर्गो न च देशाद्यसंभवात् ॥ ४२ ॥

कूटस्थस्यापि कारणत्वमयस्कान्तवदित्याशङ्क्य ब्रह्मसत्तासंनिधिसातत्या-द्ब्रह्मवदेव जगतः सर्गोऽपि सातत्येन स्यादिति दूषयति । ब्रह्मेति । न चास्तु सर्वदा सृष्टिरिति वाच्यं सर्वं हि जायमानं देशे काले च जायते न च तथा देशकालादि संभवति देशस्य देशान्तराभावात्कालस्य च कालान्तराभावान्न चावस्थान्तरमवस्थायाः सिध्यत्यनवस्थानादतो न सर्वदा सृष्टिरित्याह । न चेति ॥ ४२ ॥

नाभूत्सृष्टिरभूतत्वादभूतं कालहेतुतः ।
न भविष्यत्यभाव्यत्वादभाव्यं चाक्रियोत्थितेः ॥४३॥

किंच भूतकालपरिच्छेद्या वा भविष्यत्कालपरिच्छेद्या वा वर्तमानकालपरि-च्छेद्या वा सृष्टिरेष्टव्या नाद्या स्रष्टृत्वेनेष्टस्य ब्रह्मणोऽसङ्गत्वेन भूतकालसंबन्धाभा-वादित्याह । नाभूदिति । अभूतत्वे ब्रह्मणो हेत्वन्तरमाह । अभूतमिति । काल-कारणत्वादभूतं कालापरिच्छेद्यं ब्रह्म कारणत्वेन कालान्वयस्य मायात्मकत्वाद्ब्र-ह्मणो घटादिवन्न कालव्याप्यतेत्यर्थः । द्वितीयं दूषयति । न भविष्यतीति । ब्रह्मणो भविष्यत्कालापरिच्छेद्यत्वादितिहेतुमाह । अभाव्यत्वादिति । तस्याभा-व्यत्वे हेत्वन्तरमाह । अभाव्यं चेति । अक्रियोत्थितिरकार्यत्वम् ॥ ४३ ॥

नेदानीमद्वितीयत्वात्कौटस्थ्यादात्मनः सदा ।
भविष्यत्यस्त्यभून्नातो वस्तुवृत्तमपेक्ष्य तु ॥ ४४ ॥

तृतीयं प्रत्याऽऽह । नेदानीमिति ॥ ४४ ॥

---

१ (ग. घ.) °रुत्पद्यते । २ (ग. घ.) °तीयप° । ३ (ग. घ.) °तत्येन ब्रह्म° । ४ (ग. घ.) °नाद्यः स्र° ।

भविष्यत्यस्त्यभूच्चेति यतो वन्ध्यं विशेषणम् ।
उष्ट्रादिवदणोस्तस्मादविद्यैवात्र कारणम् ॥ ४५ ॥

इदं च हेतुद्वयं पूर्वत्रापि तुल्यं कालत्रयविशेष्यत्वं यतः सृष्टेरश्लिष्टमतो मायात्मिकैव सृष्टिरितिफलितमाह । भविष्यतीति । यथा करभो रासभो वा परमाणुरितिपरमाणोर्विशेषणं निरर्थकं तथा कालत्रयमपि सृष्टिविशेषणं न सिध्यत्यतः सृष्टावविद्यैव कारणमित्युक्तं स्पष्टयति । उष्ट्रादिवदिति ॥ ४५ ॥

असतः कारणं नास्ति सतोऽनतिशयत्वतः ।
कौटस्थ्याज्जन्मनाशानामनवस्था जनेर्जनौ ॥४६॥

किंच सदसद्वा जायते न तावदसदुत्पद्यते तस्यासत्त्वादेव कारणासंबन्धेन जन्मायोगान्नापि सञ्जायते तस्य पूर्वमेव सत्त्वाज्जन्मातिशयाभावादतः सृष्टिरपारमार्थिकीत्याह । असत इति । जन्मादिभावविकाराणां जन्माद्यभावात्तेषां कूटस्थत्वाच्च सृष्टिरपारमार्थिकीत्याह । कौटस्थ्यादिति । जन्मनाशग्रहणमितरेषामपि भावविकाराणामुपलक्षणार्थं जन्मादेर्जन्माद्यङ्गीकारे दोषमाह । अनवस्थेति । यथा जन्मनो जन्माभ्युपगमेऽनवस्था तथा नाशस्य नाशेऽपक्षयस्यापक्षये परिणामस्य परिणामे विवृद्धेर्विवृद्धावस्तित्वस्यास्तित्वे चानवस्थासाम्याज्जन्मादेर्जन्माद्ययोगात्कूटस्थत्वमास्थेयं न च तथेष्यते ततः सृष्ट्यादि कल्पितमेवेत्यर्थः ॥ ४६ ॥

कालत्रयस्याविद्यायाः समुत्थानादहेतुता ।
कर्मदेवेश्वरादीनामत एवानिमित्तता ॥४७॥

कालो जगतो हेतुरिति केचित्तत्राऽऽह । कालत्रयस्येति । धर्माधर्मादिकारणमित्यपरे तान्प्रत्याह । कर्मेति । अत एवं तेषामविद्यायाः समुत्थानादेवेति यावत् ॥ ४७ ॥

जनिस्थित्यप्यया ह्येते जगतः स्युः प्रतिक्षणम् ।
धिया जनयते कर्ता कर्मभिश्चेति हि श्रुतिः ॥४८॥

कालादेरकारणत्वे ब्रह्मणश्च कूटस्थत्वे मायामयी सृष्टिर्विद्याकर्मवशात्प्रतिक्षणं जगतो भवतीति श्रुत्यन्तरावष्टम्भेन दर्शयति । जनीति ॥ ४८ ॥

---

१ (ग. घ. च.) °रणसं । २ (ग. घ. ङ. च.) सज्जन्यते । ३ (च.) °वमेवे° ।

अनादिमध्यनिधनाविद्यासंदूषितात्मनः ।
ब्रह्मणो जायते व्योम तिमिरादिव चन्द्रमाः ॥४९॥

सृष्टिश्चेन्मायामयी तर्हि कथमात्मन आकाशः संभूत इति प्रत्यग्ब्रह्मणः सकाशादाकाशादिसृष्टिरुपदिश्यते तत्राऽऽह । अनादीति ॥ ४९ ॥

नालं क्षणमपि स्थातुं कार्यं तदध्रुवता कुतः ।
रज्ज्वेव भोग्यविद्योत्थंमूढदृष्टेर्ध्रुवायते ॥ ५० ॥

आकाशादेर्ब्रह्मणो जायमानत्वेऽपि प्रध्वंसवदनाशित्वं किं न स्यात्तत्राऽऽह । नालमिति । तर्हि कथमाकाशादेर्ध्रुवत्वबुद्धिस्तत्राऽऽह । रज्ज्वेवेति ॥ ५० ॥

तिमिरोपप्लुतो यद्वद्भिन्नामिव समीक्षते ।
चन्द्रिकामात्मनस्तद्वत्कार्यं भिन्नं समीक्षते ॥५१॥

ब्रह्मकार्यत्वे जगतो ब्रह्मभेदप्रतिभानासंभवाद्घटस्य मृदो भेदानुपलम्भात्प्रकृते च भेदप्रतीतेर्न ब्रह्मकार्यं जगदित्याशङ्क्याऽऽह । तिमिरेति ॥ ५१ ॥

यद्यद्भूतं यथासंख्यं तत्तत्तावद्गुणं स्मृतम् ।
पूर्वैर्व्याप्तानि कार्यत्वादुत्तराणि यथाक्रमम् ॥५२॥

आकाशो जायमानः स्वगुणेन शब्देन सह जायते वाय्वादीनि तु स्वकीयैर्गुणैः स्पर्शनादिभिराकाशादिपूर्वपूर्वगुणैश्च शब्दादिभिः सह संभवन्तीति भाष्योक्तमनुवदति । यद्यदिति । भाष्यार्थं समर्थयते । पूर्वैरिति । पूर्वपूर्वाकाशादिभूतव्याप्तत्वेनोत्तरोत्तरवाय्वादिभूतोत्पत्तेस्तत्तदाकाशादिभूतगुणवत्त्वमुत्तरोत्तरवाय्वादिभूतस्योचितमित्यर्थः ॥ ५२ ॥

आकाशादेश्च कार्यत्वान्न वाय्वादि प्रजायते ।
वियद्रूपान्मरुज्जन्म तस्मादात्मन एव तत् ॥५३॥

आकाशाद्वायुरित्यादावाकाशादेर्वाय्वादिकारणत्वं श्रूयते तन्न यथाश्रुतं ग्राह्यमनन्वपादनवस्थानाच्च कार्यस्योपादानत्वासंभवादित्याह । आकाशादेश्चेति । आकाशाद्वायुरित्याद्या श्रुतिस्तर्हि कथमित्याशङ्क्य तत्तद्रूपापन्नं ब्रह्मैवानादि तत्तदुपादानमितिश्रुतेरुपपत्तिमाह । वियद्रूपादिति ॥ ५३ ॥

---

१ (ग. घ.) °दिरु° । २ (ग. घ.) °द्योत्थो मू° । ३ (ग. घ.) °शादध्रुव° । ४ (ग. घ.) °मृद्भेदा° । ५ (ग. घ. च.) °कीयगुणैः ।

पञ्चैव खलु भूतानि व्योमादीन्युपलक्षयेत् ।
कार्यकारणरूपेण भूतेभ्यो नान्यदिष्यते ॥ ५४ ॥

दशैव भूतमात्रेति क्वचिदुक्तत्वात्किमिति पञ्चानामेव भूतानामिहोत्पत्तिरुक्तेत्याशङ्क्य पञ्चीकृतापञ्चीकृताभिप्रायेण दशसंख्याव्यपदेशात्पञ्चैव वस्तुतो भूतानीति तेषामेवात्रोत्पत्तिरुक्तेत्याह । पञ्चैवेति । भूतानां पञ्चत्वेऽपि तदतिरिक्तमस्ति कार्यं कार्यभेदस्यासंख्यत्वादित्याशङ्क्य कार्यकारणरूपेण वर्तमानभूतपञ्चकातिरेकेण नान्यदस्ति कार्यमित्याह । कार्येति ॥ ५४ ॥

वाय्वादिषु तु यः शब्दः खस्थं तमविचक्षणाः ।
वाय्वादीनामिवेक्षन्ते स्रग्गुणानिव भोगिनः ॥५५॥

आकाशस्य सहजः शब्दो वायोः सहजस्पर्शस्तत्राकाशसंबंधेन शब्दो दृश्यते तेजसः सहजं रूपं तस्मिन्नाकाशवायुसंबंधेन शब्दस्पर्शौ दृश्येते । अपां सहजो रसस्तास्वाकाशादिभूतत्रयसंबंधेन शब्दस्पर्शरूपाण्युपलभ्यन्ते । पृथिव्याः सहजो गन्धस्तस्यां पूर्वभूतचतुष्टयसंपर्कद्वारेण शब्दस्पर्शरूपरसा गृह्यन्ते न स्वत इत्युक्तं गृह्यमाणगुणानां तत्र तत्र स्वाभाविकत्वसंभवादित्याशङ्क्याऽऽह । वाय्वादिष्विति । शब्दग्रहणं स्पर्शादीनामुपलक्षणार्थमेकैकत्रैकैकगुणस्य स्वतोभावाद्गुणान्तरस्य भूतान्तरसंपर्कप्रयुक्तत्वान्न स्वाभाविकत्वसिद्धिरित्यर्थः ॥५५॥

चतुर्गुणात्मिका पृथ्वी[illegible]पि सा यथा ।
ब्रह्मात्मकं जगत्सर्वं ब्रह्मै[illegible]मयम् ॥ ५६ ॥

ब्रह्मणो भूतकारणत्वे भूतमयत्वेन सवि[illegible]समुत्थं[illegible]रित्याशङ्क्याऽऽह । चतुर्गुणेति । गुणशब्देन भूतान्युच्यन्ते । ज्ञानि[illegible]भूतचतुष्टयकार्यत्वात्पृथिव्या भूतचतुष्टयात्मकत्वेऽपि न भूतचतुष्टयस्य [illegible]ध्यात्मकत्वं पृथिवीकार्यत्वाभावात्तथाभूतभौतिकं जगद्ब्रह्मकार्यत्वादशेषमपि हि ब्रह्मात्मकं तद्व्यतिरेकेण नास्ति न हि शुक्त्यादिव्यतिरेकेण रजतादि संभवति ब्रह्म तु न जगदात्मकमतत्कार्यत्वान्न हि शुक्त्यादिरजताद्यात्मकमतो ब्रह्मणो निर्विशेषत्वमविरुद्धमित्यर्थः॥५६॥

सत्यं ज्ञानमनन्तं यत्प्रत्यग्ज्ञायि पुरैकलम् ।
अनन्यानुभवं ब्रह्म तत्सिद्धं न्यायतः स्फुटम् ॥ ५७ ॥

ब्रह्मणः सर्वकारणत्वेन सर्वस्य जगतो ब्रह्मव्यतिरेकेणासत्त्वस्यारम्भणाधिकरणन्यायेन सिद्धत्वात्प्रतिज्ञातं सत्यत्वादि सिद्धमित्युपसंहरति । सत्यमिति ॥५७॥

---

१ (क. ग.) ये । का° । २ (च.) °थिव्यां स° । ३ (क. च.) इत्युक्तं (ख.) इति यु° । ४ (घ.) °ह्मत्वव्य° ।

दिगादिकारणो देवः पञ्चभूतशरीरभृत् ।
सर्वोऽस्मीत्यभिमानेद्धो विराडेवमजायत ॥ ५८ ॥

पृथिव्या ओषधय इत्योषधीनां पञ्चीकृतपृथिवीकार्यत्वश्रवणात्पञ्चीकृतपञ्चमहाभूतोत्पत्तेरिहोक्तत्वेऽपि पृथगेव विराडात्मोत्पत्तिर्वक्तव्येत्याशङ्क्य पञ्चीकृतमहाभूतशरीरत्वाद्विराजस्तदुत्पत्त्यैवोत्पत्तिः सिद्धेत्याह । दिगादीति ॥ ५८ ॥

अस्मात्पूर्वं भवेत्सूत्रं तस्मिन्सति विराड्यतः ।
श्रुत्यन्तरानुरोधाच्च विज्ञानमितिलिङ्गतः ॥ ५९ ॥

तर्हि विराजः सूत्रकार्यत्वात्कारणस्य सूत्रस्योत्पत्तिरुच्यतां तत्राऽऽह । अस्मादिति । सूत्रमत्र विवक्षितमित्यत्रैव हेत्वन्तरमाह । श्रुत्यन्तरेति । कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेतिश्रुत्यन्तरे विराडाधारत्वेन सूत्रस्य विवक्षितत्वादिह सूत्राधारविराट्प्रतीतेः सूत्रमत्र विवक्षितं प्रतिभातीत्यर्थः । विज्ञानं यज्ञं तनुत इति विज्ञानपदस्य सूत्रवाचकत्वाच्चात्र सूत्रमभिप्रेतमित्याह । विज्ञानमितीति ॥ ५९ ॥

व्युत्थाप्यान्नमयादिभ्यो ह्यन्नं प्राणमितीरणात् ।
उपासनोपदेशाच्च सूत्रमत्र विवक्षितम् ॥ ६० ॥

भृगुवल्ल्यामन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमितिप्राणादिशब्दैः सूत्रस्याभिधानाच्च सूत्रमत्राभीष्टमित्याह । व्युत्थाप्येति । विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासत इत्यत्र विज्ञानपदेनोक्तस्योपासनोपदेशाच्च सूत्रं पञ्चीकृतभूतोत्पत्तेः पूर्वं विवक्षितमेवेत्याह । उपासनेति । न हि धात्वर्थस्यात्रोपासनमुच्यते ब्रह्मज्येष्ठमितिविशेषणविरोधात्कर्तुरात्मनश्च कर्मत्वायोगात्कारणब्रह्मणश्च विज्ञानपदेनाग्रहणादतो विज्ञानशब्देन सूत्रमेव गृहीतमित्यर्थः ॥ ६० ॥

कार्योत्पादात्पुरा सूत्रं मृद्वत्सदविभागवत् ।
कारणं कार्यमुत्पाद्य कार्यतामिव गच्छति ॥ ६१ ॥

पूर्वमेव विराडुत्पत्तेः सूत्रोत्पत्तिरभीष्टा चेत्तत्र पूर्वमेव किमिति कार्यव्यवहारो न बभूवेत्याशङ्क्याऽऽह । कार्येति । विराडुत्पत्तेः पूर्वं कार्यमपि सूत्रं स्वकारणेन सता परमात्मना सह विभागाभावादतिसूक्ष्मत्वात्कार्यव्यवहारक्षमं न भवति तदेव पुनर्विराडात्मकं कार्यमुत्पाद्य मृदिव घटादिकार्यं कार्येना कार्यव्यवहारं गच्छति तद्व्यवहारक्षमं भवत्येव विराडात्मद्वारा स्थूलतालाभादित्यर्थः ॥ ६१ ॥

---

१ (ख. ग. घ.) °दिकर°। २ (ग. घ. च.) °तम°। ३ (ग.) °त्त्रं म°। ४ (ङ.) °गतः । का°। ५ (ग. घ.) °र्यैताव्य°। ६ (क. ख.) °त्येवंवि°।

